# समर्पणम्

२०१२

सम्पादकः

डॉ. सौ. आशा रवीन्द्र गुर्जर (फडके)



गायत्री साहित्य, पुण्यपत्तनम्

# समर्पणम्

## सप्तमं प्रसूनम्

सम्पादकः
डॉ. सौ. आशा गुर्जर (फडके)

गायत्री साहित्य
२०१२

॥ श्रीः ॥

समर्पणम् (संस्कृत-लेख-कथा-काव्य-कथाकाव्यानुवाद-सङ्ग्रहः)
प्रा. ग. बा. पळसुले स्मृति-ग्रन्थमालायाः सप्तमं प्रसूनम्।

- संपादक मण्डलम्

| | |
|---|---|
| आशा गुर्जर | रंजना दाते |
| कांचन मांडे | शैलजा कात्रे |
| भाग्यलता पाटसकर | प्रसाद जोशी |
| ज्योत्स्ना खरे | भारती बालटे |



- प्रकाशनदिनम्
१७/१०/२०१२

- अक्षरविन्यासः
संवाद ट्रेड प्रिंटस्, प्रा. लि
गोवईकर इमारत, ५९५ शनिवार पेठ, पुणे ३०
(दूरभाष - ०२०-२४४८५६३२)

- मुखपृष्ठम्
श्री. सतीश पांडे, छायाचित्राणि - सौ. आशा गुर्जर

- मुद्रकः
स्टेप इन् सर्व्हिसेस, कसबा पेठ, पुण्यपत्तनम्

- प्रकाशिका-प्राप्तिस्थलम्
सौ. आशा गुर्जर, गायत्री साहित्यम्
२६/१२, प्रतीकनगरम्, पुण्यपत्तनम्, ४११००६ (महाराष्ट्र)
दूरभाष : ०२०-२६६९५१६८, चलध्वनि : ९०९६०८१३०८

- मूल्यम् : सार्धशतरूप्यकाणि ₹ १५०/-

- ISBN - 978-81-910324-4-5

# अनुक्रमः


१. डॉ. स. मो. अयाचित ............ प्रायेण हि मीमांसा लोके लोकायतीकृता ........ ११
२. सौ. दीपा आळंदकर ............ मम पितामही – मम आदर्शः ........................ १५
३. कु. रूपाली कवीश्वर ............. व्यक्तिमत्त्वविकासकराणि सुभाषितानि ......... १७
४. श्री. अनंत कुलकर्णी ............ क्रोध: चाण्डाल: .............................................. २०
५. आशा कुलकर्णी ................... नर्मदापञ्चकम् .............................................. १६७
६. डॉ. सौ. निर्मला कुलकर्णी ..... पाण्डुलिपिलेखकनामानि ................................ २१
७. श्री. रोहन कुलकर्णी ............. गौः न केवलं पशुः अपि तु राष्ट्रसम्पत्तिः, चार्वाक... २४
८. सौ. वंदना कुलकर्णी ............ पिता ........................................................... २८
९. कु. पल्लवी केतकर ............... वदतु क्षमस्व माम्, महार्घता ................. १९,५३
१०. डॉ. श्रीकांत केळकर............. आदराञ्जलिः, स्मरणम् ...................... ३०,३१
११. डॉ. सौ. हेमा क्षीरसागर ......... अपूर्वः वरः, काव्यानन्दः ................................ ३३
१२. डॉ. दे. खं. खरवंडीकर ......... सत्यानृते मिथुनीकृत्य... ................................ ३५
१३. डॉ. सौ. ज्योत्स्ना खरे .......... केवलं संप्राप्ताऽशीतिम् .................................. ३८
१४. श्री. चंद्रशेखर गाडगीळ .......... वदत, कथं जीवितव्यम्? ................................ ४०
१५. डॉ. सौ. मुग्धा गाडगीळ ......... ऋग्वेदाथर्ववेदयोः निर्ऋतिः ................................ ४१
१६. कु. श्रुती गाडगीळ ................ संस्कृतकाव्यस्य पञ्चप्राणाः ................................ ४३
१७. सौ. प्राची गुमास्ते ................. 'डिजिटल कल्चर' समस्याः ................................ ४५
१८. डॉ. सौ. आशा गुर्जर .............. सन्ध्यारागः ...................................................... ४६
१९. श्री. प्रणव गोखले ................. मधुराष्टकम् .................................................... ५१
२०. सौ. माधवी गोडबोले ............. अष्टभुजाधारिण्यै नमः ........................................ ५२
२१. कु. अनघा गोवंडे ................. संवादः ............................................................ ५४
२२. वैद्य श्री. श्रीकर जळूकर ....... रक्तमरिचम् ....................................................... ५६
२३. डॉ. सौ. अनघा जोशी ........... दायभागे स्त्रीधनविमर्शः ........................................ ५८
२४. श्री. ओंकार जोशी ................ गणितज्ञः श्रीनिवास-रामानुजः ................................ ६१

२५. डॉ. नीलेश जोशी ................ ईश्वरः ........................................................ ६३
२६. डॉ. सौ. माधवी जोशी .......... संस्कृतस्य समस्या ...................................... ६५
२७. डॉ. सौ. माणिक ठकार ......... दिव्यत्वाभिमुखं द्वारम् ....................................... ६८
२८. सौ. अनघा ठोंबरे ................. शब्दसामर्थ्यम् .................................................. ७०
२९. श्री. अरविंद दंडगे ................ कालाय तस्मै नमः ............................................. ७२
३०. डॉ. सौ. रंजना दाते ............. दैवं चैवात्र... ..................................................... ७४
३१. डॉ. सौ. मुक्ता दाभोळकर...... मम छन्दः ........................................................ ७५
३२. प्रा. विनया देव ..................... अम्बराडम्बरेण किम्? ........................................ ७८
३३. डॉ. सौ. इंदुमती देशपांडे ...... मुक्तमनसा आदानप्रदानम्, कबीरसूक्तयः ...... ८१
३४. डॉ. सौ. मंजुश्री देशपांडे ....... देहोऽयमनामयोऽस्तु... ......................................... ८४
३५. संपदा देशपांडे ...................... अज्ञातात् प्रेरणा ................................................. ८५
३६. सौ. मानसी देशमुख .............. सः मां पश्यति .................................................. ८९
३७. डॉ. पु. द. नवाथे .................. स्व. प्रा. चि. ग. काशीकराणां संशोधनकार्यम्... ९२
३८. सौ. प्रियंवदा नवाथे .............. अस्माकम् अण्णा ................................................ ९६
३९. डॉ. सौ. मृदुला नासेरी .......... कर्मचारिणः स्वप्नः, विश्वसारथी भव ............ ९८
४०. सौ. संजीवनी पटवर्धन .......... दाता वृक्षः ........................................................ ९९
४१. डॉ. अंजली पर्वते ................... नॅकगीतम् ......................................................... १०२
४२. सौ. आरती पवार .................... आत्मनो मोक्षार्थं जगद्हिताय च .................... १०३
४३. सौ. मोहना पळसुले ................ मम मित्रम् – अण्णा ......................................... १०५
४४. डॉ. सौ. भाग्यलता पाटसकर ..... एहि प्रतिभे ! .................................................... १०७
४५. कु. सई बांदिवडेकर ............... गणपतेः साकल्याध्ययनम् ................................. १०८
४५. डॉ. शैलजा बापट ................... गौडपादाचार्याः आद्य-उपनिषद्भाष्यकाराः ... ११०
४६. प्रा. भारती बालटे .................. कर्मयोगस्य प्रयोजनानि ..................................... ११३
४७. भावना बालटे ........................ मायकेल अँजेलो ................................................ ११५

४८. प्रा. अविनाश बिनीवाले .......... अर्धं (अपि) त्यजति पण्डितः ! ................ ११६
४९. डॉ. म. ना. बोपर्डीकर .......... कृष्णयुगाय तस्मै नमः ............................ ११९
५०. सौ. सुवर्णा बोरकर................ सु-दर्शनः पूजनीयः सुदर्शनमहोदयः .......... १२१
५१.श्री. नरसिंह भट्ट .................. नमो गुरुभ्यः ............................................ १२४
५२. डॉ. भाग्यश्री भागवत.............. व्याकरणसामर्थ्यम् ..................................... १२६
५३. मञ्जूषा भाण्डारी.................. उद्धरेदात्मनात्मानम् ................................. १२७
५४. कु. वैखरी हेमंत भालेराव....... यातुपाषाणः ............................................ १२९
५५. श्री. विद्याकर भिडे.................. निष्णातः प्रा. श्री. रामचंद्र ह. गाडगीळः ......... १३०
५६. श्री. संदीप भुसारे................. सन्तज्ञानेश्वरः ......................................... १३२
५७. सौ. निर्मला महाजन ............. नीलवर्णं गगनम् ...................................... १३५
५८. प्रा. सौ. कांचन मांडे ............. बुभुक्षा, गुर्वनुस्मरणम्................................ १३६
५९. सौ. संजीवनी मायदेव............ महान् मन्त्रपुष्पाञ्जलिः ............................ १३८
६०. डॉ. सौ. गौरी माहुलीकर ....... मम प्रयागयात्रा ....................................... १३९
६१. कु. वैदेही मिजार.................. अभिनेता.................................................. १४१
६२. प्रा. रवीन्द्र अंबादास मुळे ...... यमनचिकेतसोः उपाख्यानम्....................... १४३
६३. डॉ. सौ. राजश्री मोहाडीकर... गाथासप्तशती ........................................... १४६
६४. श्री. हेमंत राजोपाध्ये ............ गेन्झेलीझेल-स्तवः..................................... १४७
६५. श्रीमती विजया लेले ............. अब्दुल-रहेमानकृतः सन्देशरासकः .......... १४८
६६. श्री. भव शर्मा ...................... चिन्तनाय चिन्तनम्.................................. १५२
६७. सौ. शालिनी शेंड्ये................ भगवद्गीतायां ज्ञानस्वरूपं कीदृशम्........... १५४
६८. सौ. कृपा सप्रे ...................... प्रथमं ध्वनिमुद्रणम्-ऋग्वेदस्य .................. १५९
६९. कु. स्वरजा साळस्कर .......... धर्मो रक्षति रक्षितः .................................. १६१
७०. श्री. वसंत सुगुरु .................. अलं चिन्तया, चिन्तनम् अस्तु ................. १६४
७१. सौ. वंदना सेलूकर................ जीवो जीवस्य जीवनम् ............................ १६५

# ईश्वरः

श्री. नीलेश जोशी

विभिन्नभारतीयदर्शनग्रन्थेषु योगशास्त्रं परमं स्थानं गतम्। महाभारते ''न तु योगमृते प्राप्तुं शक्या सा परमा गतिः'' इत्युक्तं तत्सत्यं खलु। भारतीयदर्शनशास्त्राणामन्तिमं ध्येयं प्राणिनां त्रिविधदुःखाद् विमुक्तिः इत्येव। दुःखत्रयाणामात्यत्तिकनिवृत्तिः मुक्तिः मोक्षः कैवल्यमपवर्गो निःश्रेयो निर्वाणं परमपदं चेति विविधनामभिरभिज्ञाता। दुःखाद् आत्यन्तिकनिवृत्तेः सिद्ध्यर्थं शुद्धज्ञानमपरिहार्यम्। स्वयं भगवता श्रीकृष्णेन कथितम् – **''न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।''** (गीता ४.३८) किन्तु कथमिदं ज्ञानमाप्तुं शक्यते? तर्हि भगवतैव प्रत्युत्तरितम् यो 'योगसंसिद्धो' नाम योगयुक्तः स्यात् स तज्ज्ञानं कालेन **''आत्मन्येव विदन्ति''** (गीता ४.३८) अत एव ''छित्त्वैनं संशयं योगमातिष्ठ'' इत्युच्यते। इदं योगशास्त्रस्य महत्त्वमभिज्ञायाऽऽ सहस्रवर्षेभ्यः भारतवर्षे योगशास्त्रस्य प्रसारः प्रचारश्च निरन्तरं प्रचलत्येव।

पातञ्जलयोगशास्त्रे प्रतिपादिताः सिद्धान्ताः सांख्यदर्शनस्य सिद्धान्तान् अनुयान्तीति स्पष्टम्। किन्तु पातञ्जलयोगशास्त्रप्रतिपादितया ईश्वरसंकल्पनया एवेदं शास्त्रं 'सेश्वरसांख्यम्' इति नाम्ना विख्यातम्। तत्पातञ्जलयोगसूत्रस्थायाः सविशेषेश्वरसंकल्पनायाः योगसूत्रस्य परप्रामाणिकभाष्यं व्यासभाष्यमधिकृत्य विवरणमारभ्यते।

योगदर्शनस्य प्रधानं प्रयोजनं समाधिफलप्राप्तिः खलु। तदर्थं विभिन्नोपायविमर्शोऽनुष्ठीयते। तस्मिन्नेव विवेचनक्रमे शीघ्रं समाधिफलमवाप्तुमीश्वरप्रणिधानं प्रतिपादितं तद्यथा – **'ईश्वरप्रणिधानाद्वा'** (योगसूत्र १.२३) इति सूत्रेण। ईश्वरस्य परमभक्तिभावेनैव अतिशीघ्रं समाधिफलं प्राप्तुं शक्यते। ईश्वरप्रणिधानरूपात् भक्तिविशेषाद् विधाता तमभिमुखीभूयाऽनुगृह्णाति। अत्राभिध्यानं नाम संकल्पपूर्वकमीश्वरप्रसादादपि योगिजनाः अतिशीघ्रतया तत्फलं प्राप्नुवन्तीति व्यासमहर्षिणा कथितं तद्यथा – **''प्रणिधानाद् भक्तिविशेषादावर्जित – ईश्वरस्तमनुगृह्णाति अभिध्यानमात्रेण, तदभिध्यानादपि योगिन आसन्नतमाः समाधिलाभः फलं च भवतीति।''** (योगसूत्रम् १.२३)

ये ईश्वरप्रणिधानपरायणास्ते स्वाराधनाफलं नेच्छन्ति। तेषां कृते परमेश्वरभजनसंकीर्तनेन समं महत्त्वपूर्णं च किमपि नास्ति। अत एव उच्यते –

**''अपि चेत्सुदुराचारो भजते मामनन्यभाक्।**
**साधुरेव स मन्तव्यः सम्यगव्यसितो हि सः ॥''** (भगवद्गीता ९.३०)

तात्पर्यार्थो यदीश्वर एव प्रधानः। योगसूत्रेषु ईश्वरस्वरूपनिमित्तेन प्रश्न उपस्थाप्यते तद्यथा

"अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वरो नामेति?" (योगसूत्र १.२४)

अर्थात् सांख्यदर्शनोक्त–प्रधान–प्रकृतिपुरुषाभ्यां व्यतिरिक्तः कोऽयमीश्वर इति। तदा प्रतिपादितम् – "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषाविशेष ईश्वरः।"

अविद्यादिकक्लेशैः शुभाशुभकर्मभिश्च पापपुण्ययोः फलस्वरूपा जातिरायुभोगस्तेषां प्रतिनिधिस्तथा सुखदुःखजविपाकेन सुखदुःखात्मकभोगजन्यानेकविधवासनाभिश्चाऽस्पृष्टो जीवोऽन्यपुरुषेभ्यो विशिष्टः स चेतनपुरुषविशेष ईश्वर इति। ईश्वरः कालत्रयबन्धनाद् मुक्तो ननु। ईश्वरस्योत्कर्षार्थं श्रुतिस्मृतिपुराणानि प्रमाणीभूतानि। तथा च विशुद्धः सत्त्वस्वरूपः चित्तरूपः ईश्वरस्योपाधि एव शास्त्रप्रमाणं हेतुभूतं नु। ईश्वरो विशुद्धः सत्त्वमयश्चितसम्पन्नः यस्मिन् सम्प्रति विद्यमानानि शास्त्राणि उत्कर्षाश्चैतेषां कार्यकारणभावस्य अनादिकालात् सम्बन्धः वर्तते।

सर्वदैश्वर्यमुक्त ईश्वरो यस्यैश्वर्यं समानता चातिशयता च द्वाभ्यां रहितम्। अणिमागरिमादिकैश्वर्यसम्पन्नः सर्वविधजीवरूपपुरुषेभ्यो विशिष्ट अत एव स पुरुषविशेषः। तद्यथा भाष्यकारेण प्रतिपादितम् – "**तस्माद्यस्य साम्यातिशयविनिर्मुक्तमैश्वर्यं स ईश्वरः, स च पुरुषविशेष इति।**" (योगसूत्रव्यासभाष्यम् १.२४.२४)

ईश्वरः सर्वज्ञतायाः कारणं ज्ञानं सर्वातिशयश्च। अत एव "तत्र निरतिशय ईश्वर" (योगसूत्र १.२५) ईश्वरस्य सर्वज्ञतां स्पष्टीकर्तुं भाष्यकारेण व्यासमहर्षिणा कथितम् –

"**यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बहु इति सर्वबीजम्, एतद्धि वर्धमानं यत्र निरतिशयं स सर्वज्ञ इति।**" (योगसूत्रव्यासभाष्यम् १.२५.२५)

नेश्वरः स्वार्थी अपि तु परमदयालुः कृपालुश्च। यो जगतः सृष्टेः कारणं, स प्राणिमात्रेषु उपकर्तुं तेषां कल्पप्रलयमहाप्रलयेषु संसारिणो लीनपुरुषान् उद्धर्तुं जगत्सृष्टौ प्रवृत्तः। अयमेव ननु पूर्ववर्तिकपिलादिगुरूणां गुरुः। तस्मात् "पूर्वेषामपि गुरुः कालेनानावच्छेदात्" इत्युक्तम्।

अस्येश्वरस्य वाचकः प्रणवः ॐकारः। ईश्वरो वाच्यः प्रणवस्य अपि तु ईश्वरस्य वाचकः प्रणवः। प्रणवोपासनया तल्लीनतां एकाग्रतामवाप्य चित्ते स्थिरतामापद्यते। अत एव भाष्यकारेण उच्यते – "**प्रणवस्य जपः प्रणवाभिधेयस्य चेश्वरस्य भावनम्। तदस्य योगिनः प्रणवं जपतः प्रणवार्थं च भावयतश्चित्तमेकाग्रं संपद्यते।**" (योगसूत्रव्यासभाष्यं १.२८.२८)

ॐकारस्य जपेन चित्तमेकाग्रं भवति। विष्णुपुराणेऽपि कथितं यत् प्रणवजपश्चेश्वरभावनयैव परमात्मनः साक्षात्कारो भवति। तद्यथा – "**स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमासते। स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते॥**" (योगसूत्रव्यासभाष्यं १.२८.२८)

अत एव प्रणवः ॐकारो वा ईश्वरप्राप्तिसाधनं तदेवाखिलप्राणिनो अवाप्तिस्थानम्। तेनैव दुःखत्रयाभिघातान्नितरतिशयविमुक्तिमनुभूय परमानन्दावाप्तिः स्यात्।